पाषाणसत्वपातनम्, विविधवर्णाधायकाः सूतमारणप्रकाराः इत्येवमादयो विषया निरूपिताः।

चतुर्थेऽधिकारे च—जगन्मोहन—षण्मुख—सार्वभौम—नवग्रह—लोकोत्तर—ग्रहशिवेला—पञ्चबाण—ब्रह्मास्त्र—त्रैलोक्यचिन्तामणि महाकालानलादयो रसाः प्रत्यक्षदृष्टफलाः प्रतिपादिताः।

इयं हि रसकौमुदी विस्तृतटिप्पणीसहिता मसृणोज्ज्वलपत्रेषु कज्जलसमुज्ज्वलया मसिकया विमुद्रिता विक्रयणाय सज्जीभूतेति त्वर्यतामेतद्ग्रहणाय। मूल्यम् ८ आणकाः।

## विमुद्रितम् विमुद्रितम् विमुद्रितम्

हंहो रसायनशास्त्राचार्य्यवर्य्याः! परमप्रवीणाः!! प्राणाचार्यशिरोमणयः!!! सदयं निधीयतामितोऽपि युष्मदीयं नयनद्वयम्।

विमुद्रितमिदं **पारदयोगशास्त्र**नामकमतिप्राचीनं रसायनतन्त्रम्। इदं हि तन्त्रं रसार्णव—रसरत्नाकर—रसरत्नसमुच्चय—रसहृदयतन्त्र आयुर्वेदप्रकाशादिरसग्रन्थेभ्योऽतिविलक्षणमिति नात्र कश्चन सन्देहलेशः अस्मिन् हि शास्त्रे रसायनतन्त्रान्तर्गतवेधाख्यसंस्कारप्रतिपादका बहवः प्रकाराः सुनिरूपिता। अयं च ग्रन्थो एकादशपटलैः समुद्भासितः सरलया सुविस्तृतया च टिप्पण्या समुपेतो विक्रयणाय सज्जीभूत इति त्वर्यतामेतद्ग्रहणाय। मूल्यम् १० आणकाः।